॥ श्रीः ॥

आलङ्कारिक-श्रीराजानक-रुय्यक
प्रणीतम्

# अलङ्कार-सर्वस्वम्

स्मार्तकर्मानुष्ठाननिष्ठ-कश्यपवंशावतंस-स्वधर्मधुरन्धर-पाठकोपाह्व जयकृष्णशर्मतनुजनुषा काशीस्थ-विशुद्धानन्द महाविद्यालयीय-साहित्यप्रधानाध्यापकेन गौरीनाथशर्म्मणा विरचितया महालक्ष्म्याभिधया विषमस्थलटिप्पण्या

संवलितम्

तच्च

काशीस्थ-शारदा-भवनात्
समुल्लसितम् ।

काश्यां तारायन्त्रालये श्रीरामेश्वरपाठकद्वारा मुद्रयित्वा प्राकाश्यं नीतम्
वैक्रमाब्दाः १९८३ मि०

# INTRODUCTION.

The present edition of Alankarsarwasva comprises (1) Alankarsutra (2) a Vritti (commentary on the Sutra) and (3) notes on the Vritti. The Vritti published in the Kavyamâlâ series has the following introductory line, "निजालङ्कारसूत्राणां वृत्या तात्पर्यमुच्यते.' From this it follows that both the Sutra and the Vritti are written by one and the same author. From a line in the same edition, "कृतिस्तत्र भवद्राजानकरुय्यकस्य' and from the closing line therein, सम्पूर्णमिदमलङ्कारसर्वस्वम्" it follows that Ruyyaka is the author of this book and that the book Alankarsarvasva contains the Sutra and the Vritti.

But in our ancient manuscripts of the work the introductory line runs thus:— गुर्वलङ्कारसूत्राणां वृत्या तात्पर्यमुच्यते. Here the word गुरु suggests that the Sutrakâr (the author of the Sutra) is the preceptor of the Vrittikâr (the author of the Vritti). A couplet, at the end of the manuscripts runs thus:—

"इति मङ्खुको वितेने काश्मीरक्षितिपसान्धिविग्रहिकः ।
सुकविमुखालङ्कारं तदिदमलङ्कारसर्वस्वम्" ॥

Here the word वितेने which means to expand makes it clear that Mankhuka is the Vrittikâr who has explained the Sutra written by his guru Ruyyaka. That Ruyyaka is the guru of Mankhuka is made clear when we read some of the couplets of the 25th canto of the Sree Kanthacharita by the great poet Mankhuka. They are as follow.

"व्याख्यासु यस्य वदनं रदनांशुभिरीक्ष्यते ।
आकर्षदिव वाग्देव्या धौतक्षौमपटाञ्चलम् ॥ १ ॥
अपर्यन्कमपि स्पन्दं धाम्नः सारस्वतस्य भूः ।
य एव सर्वशास्त्राणां साकारमिव जीवितम् ॥ २ ॥
विवृतीर्या लिखत्यास्त लेखन्येकाङ्गुलीतलः ।
ग्रन्थेभ्योऽर्थस्य विश्रान्त्यै सूत्रिकामर्पयन्निव ॥ ३ ॥
यत्कृतिष्ववधानेन मूर्धा कस्य न वीप्सया ।
सारस्वतरसावर्तवलनेनेव चेष्टते ॥ ४ ॥
तं श्रीरुय्यकमालोक्य सप्रियं गुरुमग्रहीत् ।
सौहार्दप्रश्रयरसस्रोतस्सम्भेदमज्जनम् ॥ ५ ॥"

"व्युच्यद्भिराननपथावसथोक्तिदेवी-
हस्ताग्रपुस्तकमुखादिव बन्धसूत्रैः ॥
दन्तांशुभिः प्रसृमरैः पिहिताधरौष्ठः
श्रीरुय्यकस्तमथ स स्वगुरुर्बभाषे ॥१॥
यच्छ्रीमङ्खक ? मुख्यतां गतवता व्युत्पत्तिविच्छित्तिभिः ।
श्रीश्रीकण्ठचरित्रमित्यभिधया काव्यं व्यधायि त्वया
एतस्मिन् सदसि प्रसिद्धविविधोपासीनविद्वद्वरे
तत्संदर्शय यस्य रोहतुतरां साफल्यतः कल्पना ॥ २ ॥"

So it is clear that Ruyyaka is the author of the Alankar-sarvasva and that Mankhuka is the Vrittikâr. M. M. T. Ganpati Shastri has written in his introduction to this work-published by him, that Mankhuka is the author of this book. I do not know on what ground he has written thus.

Rajanak Ruyyaka was the son of Rajanak Tailak the author of *Udbhat Viveka.* He lived at Kashmere a great centre of learning. It is very difficult to give the exact date of his

birth as no popular book of history, give any thing about him. As he was the guru of the great poet Mankhuka, he must have been born some 20 years before him.

Mankhuka flourished in the first half of the 12th century as M. M, T. Ganpati Shastri has recorded in the preface of his book Mankhuka flourished during the time of Jaisingha, the son of Sussala, who ruled over Kashmere. Jai Singha ruled over Kashmere from 1127 to 1149 A. D. So from this also, it follows that Mankhuka flourished in the first half of the 12th centuy. Mr. P. Peterson has also admitted that Mankhuka flourisrhed in the first half of the 12th century as is clear from a paragraph which runs thus :—

"Author of the Sreekantha Charita and of the Mankha Kosha' according to Buhler, Kashmere Report, P. 50 the Sree Kanth Charita was probably written between 1135 and 1145 A. D." It follows from it that Mankhuka must have been born between 1100 and 1110 A. D.

Rajanak Ruyyaka the preceptor of Mankuka must have been born between 1080 and 1090 as he is expected to be some 20 years older than Mankhuka.

Nothing is known about Ruyyaka's wife and children. He holds a very degnified position among the Alankarikas It is made clear when we read the concluding lines of the Sarhidaya Lila by this author.

They are as follow :—

**"समाप्तेयं सहृदयचमत्कारिणी सहृदयलीला कृतिः श्रीमद्वि-पश्चिद्वरराजानकतिलकात्मजश्रीमदालङ्कारिकसमाजाग्रगण्य श्रीराजा-नकरुय्यकस्य राजानकरुचकापरनाम्नोऽलङ्कारसर्वस्वकृतः ।"**

Some say that Rajanak Ruchaka is the author of Alankar Sarvasva and not Rajanak Ruyyaka. But from the above quotation it is clear that Ruchaka and Ruyyaka are not different persons but that both are the names of one person. The following are the Books written by this author.

(1) Alankarsarvasvam. (2) Notes named Alankaranusarini on Somapal Vilaskavya by Jalhan. (3) Kavyaprakash Sanketa. (4) Sree Kanthastava. (5) Sarhidaya Lila. (6) Sahitya Mimansa. (7) Harsha Charit Vârtika.

I shall be highly obliged if the readers will take the trouble of informing me of the mistakes, which may appear in the book, so that I may be able to put before the public a correct edition in future.

Benares,
*June 28th 1926.*

GAURINATH PATHAK.

# श्रीराजानक-रुय्यकः

कोऽयं महापुरुषः, कतमोऽस्य देशः, कस्य वा कुलमयमलञ्चकार, कदावायमिममिलामण्डलं मण्डयामास, कीदृशश्चास्यालङ्कारिकेषु गौरवं, अन्यापि काचिदस्ति न वा कृतिप्रवृत्तिरित्यादिषु विषयेषु

## भूमिका-भ्रम-शोधनम् ।

संस्कृतभूमिकायास्तृतीयपृष्ठे चतुर्विंशतितमपङ्क्त्यनन्तरम-यम्पाठः संयोजनीयः । पञ्चविंशतितमपङ्क्तावारम्भे च चकारो न पठनीयः ।

"च रुय्यक एवेति सिद्ध्यति । तृतीयपद्यावलोकनेन प्रतीयते यन्मङ्खुक एव"

यतः किल सप्तविंशत्युत्तरैकादशशतमित (११२७) खिस्तसंवत्सरा-दारभ्यैकोनपञ्चाशदुत्तरैकादशशतमित (११४९) खिस्तसंवसरपर्यन्तं काश्मीरदेशशासकस्य राजन्यचक्रचूडामणेः सुस्सलसूनोर्जयसिंहम-हीपालस्य समये समुत्पन्नो मङ्खक-महाकविः निजनिर्मितश्रीकण्ठच-रितस्य पञ्चविंशे सर्गे श्रीरुय्यकमात्मनो गुरुत्वेनोपनिबबन्ध ।

तेच श्लोका यथाः—

"व्याख्यासु यस्य वदनं रदनांशुभिरीक्ष्यते ।
आकर्षदिव वाग्देव्या धौतक्षौमपटाञ्चलम् ॥ १ ॥

अपश्यन्कमपि स्पन्दं धाम्नः सारस्वतस्य भूः ।
य एव सर्वशास्त्राणां साकारमिव जीवितम् ॥ २ ॥
विवृतीर्यो लिखत्यासलेखन्येकाङ्गुलीतलः ।
ग्रन्थेभ्योऽर्थस्य विश्रान्त्यै सूत्रिकामर्पयन्निव ॥ ३ ॥
यत्कृतिष्ववधानेन मूर्धा कस्य न वीप्सया ।
सारस्वतरसावर्तवलनेनेव चेष्टते ॥ ४ ॥
तं श्रीरुय्यकमालोक्य सप्रियं गुरुमग्रहीत् ।
सौहार्दप्रश्रयरसस्रोतः सम्भेदमज्जनम् ॥ ५ ॥

तत्रैव-पुनः—

"व्युत्स्यद्भिराननपथावसथोक्तिदेवी-
हस्ताग्रपुस्तकमुखादिव बन्धसूत्रैः ॥
दन्तांशुभिः प्रसृमरैः पिहिताधरोष्ठः
श्रीरुय्यकस्तमथ सस्वगुरुर्बभाषे ॥ १ ॥

यच्छ्रीमङ्खक ? मुख्यतां गतवता व्युत्पत्तिविच्छित्तिभिः ।
श्रीश्रीकण्ठचरित्रमित्यमिधया काव्यं व्यधायि त्वया
एतस्मिन् सदसि प्रसिद्धविविधोपासीनविद्वद्वरे ।
तत्सन्दर्शय यस्य रोहतुतरां साफल्यतः कल्पना ॥ १ ॥"

जयसिंह महीपालस्य राज्यशासनकालः, खिस्तीय-११२७ आरभ्य ११४९ पर्यन्तं यावदासीत्। उत्पत्तिकालश्च ततो विंशतिः पञ्चविंशतिर्वा वर्षाणि प्रागवश्यम्भाव्य एव ।

मङ्खकमहाकवेरपि समयः, अस्य समयतः परमनुमानतः पञ्च सप्त वा शरदायाति । यतः स तस्यैव समये विविध–विद्या-पारङ्गमीभूत्वा महाकविरिति पदवीं प्रतिपेदे ।

इतिरीत्या मङ्खकमहाकविरपि खिस्तीयद्वादशशतकारम्भीयपञ्चसप्त वा संवत्सरे भारतभूमावाविर्बभूवेति वक्तुं सुशकमेव ।

प्रकृतग्रन्थनायको राजानकरुय्यकस्तु अस्य समयाद्न्यूनतोऽपि पञ्चविंशतिर्वा वर्षाणि प्रागासीदेव। यतोऽयं मङ्खकमहाकवेर्गुरुः । महाकवि–गुरौ च सामान्यतः पञ्चविंशतिवर्षमितकालप्राक्तनत्वमवश्यमेवापेक्षते ।

श्रीमन्तः पिटर्सनमहोदया अपि पञ्चत्रिंशदुत्तरैकादशशत-मितखिस्तसंवत्सरमारभ्य पञ्चचत्वारिंशदुत्तरैकादशशतमितखिस्त-संवत्सरं यावत् श्रीकण्ठचरितनिर्माणसमयः प्रतिपादितवन्तः ।

एवं सर्वेषामप्रमाणानां सम्यगालोचनया राजानक-रुय्यकस्य अशीतिः पञ्चाशीतिर्वोत्तरदशशतमितवर्षाणि (१०८०-८५) प्रादुर्भाव-समयः समागच्छति ।

अत्र ग्रन्थकर्तृविषयेऽपि बहुमतमवलोक्यते ।

यथाः—

कुत्रचित्प्राचीनहस्तलिखितपुस्तकेः—

"गुर्वलङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते" ।

काव्यमाला प्रकाशित पुस्तकेः—

"निजालङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते"

ग्रन्थान्ते च

"सम्पूर्णमिदमलङ्कारसर्वस्वम् । कृतिस्तत्रभवद्राजानकरुय्य (च) कस्य" ।

समुद्रबन्धव्याख्यासनाथेतुः—

इति मङ्खुको वितेने काश्मीरक्षितिपसान्धिविग्रहिकः ।
सुकविमुखालङ्कारं तदिदमलङ्कारसर्वस्वम् ॥" इत्यादि ।

अत्र प्रथमपद्यार्धे "गुरु"शब्दपाठदर्शनात्प्रतीयते यद्वृत्तिकारस्य गुरुः सूत्रकार इति ।

द्वितीय पद्यार्धे "निज" शब्दपाठदर्शनाद्ग्रन्थान्ते च "सम्पूर्णमि-दमलङ्कारसर्वस्वम् ।" इति सामान्यतः सूत्रवृत्त्योः समुदायस्यैव "अ-लङ्कारसर्वस्वम्' इति प्रतिपादनात्तस्यैव चान्ते "कृतिस्तत्रभवद्राजा-नकरुय्यकस्य" इति पाठावलोकनाच्च सूत्रवृत्त्योरेक एव प्रणेता, स च वृत्तिकारः ।

तथा च उपक्रमोपसंहारपर्यालोचनया सूत्रकारो रुय्यकः, वृत्ति-कारो मङ्खुक इत्यवगम्यते ।

यतः ग्रन्थादौ सूत्रोपन्यासात्प्रागुपोद्घातारम्भ एव वृत्तिकारः "गुर्वलकारसूत्राणां वृत्त्या तात्पर्यमुच्यते ।" इति प्रतिजज्ञे । ग्रन्थान्ते च केवलं वृत्तेरेवावसाने—

"इति मङ्खुको वितेने काश्मीरक्षितिपसान्धिविग्रहिकः ।
सुकविमुखालङ्कारं तदिदमलंकारसर्वस्वम् ॥"

इत्यार्यापि दृश्यते । अत्र "वितेने" इति क्रियापददर्शनेन स्पष्टमेव प्रतीयते यत्सूत्रग्रन्थस्याभिधेयं "अलङ्कार-सर्वस्वम्" । तच्च गुरुप्रणीतम् । मङ्खुकश्च वृत्या तस्य तात्पर्यं विवव्र इति ।

यच्च सुगृहीतनामधेयाः विपश्चिद्वराः महामहोपाध्यायाः श्रीमन्तो गणपतिशास्त्रिमहाभागा अनन्तशयन-संस्कृत-ग्रन्थावलि-प्रकाशितालङ्कारसर्वस्वस्योपोद्घातेऽनयैवार्यया "मङ्खुकोऽलङ्कारसर्वस्वस्य" कर्ता प्रख्यायत इति प्रकटितवन्तस्तत्तु नमे समीचीनतया प्रतिभाति ।

अयञ्च आलङ्कारिकसमाजेषु प्रधानभूमिरासीदित्यस्यैव रचितसहृदयलीलासमाप्तौ समाप्तिपाठावलोकनतः स्फुटीभवति :—

"समाप्तेयं सहृदयलीला । कृतिः श्रीमद्विपश्चिद्वरराजानकतिलकात्मजश्रीमदलङ्कारिकसमाजाग्रगण्य श्रीराजानक-रुय्यकस्य राजानक-रुचकापरनाम्नोऽलङ्कारसर्वस्वकृतः ।

अलङ्कारसर्वस्वस्य कर्ता राजानक-रुचकः, न तु रुय्यक इत्यपि केचन वदन्ति परमेतदवलोकनाद्रुय्यक-रुचकयोर्मध्ये व्यक्ति भेदो न दृश्यते किन्तु एकस्यैव नामद्वयमित्यनुमीयते ।

एतत्प्रणीतग्रन्थास्त्विमेः—

(१) अलङ्कारसर्वस्वम्, (२) अलङ्कारानुसारिणी नाम्नी जल्हणकविप्रणीतसोमपालविलासकाव्यस्य टीका, (३) काव्यप्रकाशसङ्केतः, (४) श्रीकण्ठस्तवः, (५) सहृदयलीला, (६) साहित्यमीमांसा, (७) हर्षचरितवार्तिकम्, इति सप्त ।

एतत्पुस्तकसंशोधनावसरे आदर्शभूत प्राचीनपुस्तकानुपलम्भान्मादृशजनसुलभेन मतिदोषेण च जनिता अशुद्धयः सुधियः संशोध्यानुगृह्णन्त्विति प्रार्थयति-विदुषामनुचरो—

ज्ये० शु० दशहरा १९८३
शारदाभवनम् काशी ।

**गौरीनाथ पाठकः**

# अलंकारसर्वस्वम् ।

## श्रीमद्राजानकरुय्य (च) कप्रणीतम्

नमस्कृत्य परां वाचं देवीं त्रिविधविग्रहाम् ।
निजालंकारसूत्राणां वृत्त्या तात्पर्यमुच्यते ॥

इह हि [1]तावद्भामहोद्भट[2]प्रभृतयश्चिरंतनालंकारकाराः [3]प्रतीयमान-[4]मर्थं [5]वाच्योपस्कारकतयालंकारपक्षनिक्षिप्तं[6] मन्यन्ते[7] । तथाहि—पर्यायोक्ताप्रस्तुतप्रशंसासमासोक्त्याक्षेपव्याजस्तुत्युपमेयोपमानन्वयादौ वस्तुमात्रं गम्यमानं वाच्योपस्कारकत्वेन [8]'स्वसिद्धये पराक्षेपः परार्थं

---

(१) तावच्छब्दो विप्रतिपत्त्यभावद्योतकः ।

(२) दण्डयादयः ।

(३) वाच्यव्यतिरिक्तत्वेन स्वसंवेदनसिद्धमित्यर्थः ।

(४) विश्रान्तिस्थानतया परमोपादेयतालक्षणम् ।

(५) वाच्योपस्कारकत्वं ह्यलंकाराणामात्मभूतम् ।

(६) समग्रालंकारान्तर्भूतं न पुनस्तद्व्यतिरिक्तमित्यर्थः ।

(७) तथात्वेन ते मन्यन्ते न पुनस्तथा संभवतीत्यर्थः ।

नह्यभिमननमात्रेणैव भावानामन्यथाभावो भवतीति भावः ।

एतदेव दर्शयति तथाहीत्यादिनाः—तैर्वस्तुमात्रं गम्यमानं वाच्यो-पस्कारकत्वेन प्रतिपादितमिति सम्बन्धः । वस्तुमात्रं न पुनरलंकारा रसश्च ।

(८) स्वसिद्धय इति । 'कुन्ताः प्रविशन्ति' 'यष्टीः प्रवेशय' इत्यादौ कुन्तादिभिः स्वप्रवेशसिद्धये स्वसम्बन्धिनः पुरुषा उपस्था-प्यन्ते । तैर्विना तेषां प्रवेशासिद्धेः । 'गङ्गायां घोषः' मञ्चाः क्रोशन्ति इत्यादौ तु गङ्गादयः शब्दाः तटादीनां तत्र घोषाधिकरणतादिसिद्धये स्वात्मानं समर्पयन्ति । स्वयं तस्य घोषाधिकरणत्वासंभवात् ।

स्वसमर्पणम्' इति [1]यथायोगं द्विविधया भङ्ग्या प्रतिपादितं तैः ।

(१) यथायोगमिति । क्वचिद्धि वाच्योऽर्थः स्वसिद्धये परं प्रतीयमानमर्थमाक्षिपति । क्वचिच्च स्वयमनुपपद्यमानः सन्प्रतीयमान एवार्थं स्वं समर्पयति । तेन यत्र यादृक्तत्र तादृगेव योज्यमित्यर्थः ।

तत्र पर्यायोक्तं यथा—

'अधाक्षीद्यो लङ्कामयमयमुदन्वन्तमतर-
द्विशल्यां सौमित्रेरयमुपनिनायौषधिवनात् ।
इति स्मारं स्मारं त्वदरिवलभीचित्रलिखितं
हनूमन्तं दन्तैर्दशति कुपितो राक्षसगणः ॥'

अत्र राक्षसगणवृत्तान्तो वाच्यः सन् स्वसिद्धये परं कारणरूपमरिपलायनाद्याक्षिपति । तत्पलायनाद्यन्तरेण राक्षसवृत्तान्तस्यासंगतेः । अप्रस्तुतप्रशंसा यथा—

'प्राणा येन समर्पितास्तव बलाद्येन त्वमुत्थापितः
स्कन्धे यस्य चिरं स्थितोऽसि विदधे यस्ते सपर्यामपि ।
तस्यास्य स्मितमात्रकेण जनयन्प्राणापहारक्रियां
भ्रातः प्रत्युपकारिणां धुरि परं वेताल लीलायसे ॥'

अत्र वेतालचरितमप्रस्तुतं प्रकरणादिवशेन स्वयमनुपपद्यमानं सत्प्रस्तुते कृतघ्नवृत्तान्ते स्वं समर्पयति । समासोक्तिर्यथा—

'दन्तक्षतानि करजैश्च विपाटितानि प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे ।
दत्तानि रक्तमनसा मृगराजवध्वा जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥'

अत्र बोधिसत्त्वे नायकव्यवहारो न संभवतीति स्वसिद्ध्यर्थं नायकत्वमाक्षिपति । आक्षेपो यथा—

'किं भणिमो भणइ किन्ति अध किं वा इमेण भणिएण ।
भणिहिसि तहवि अहवा भणामि किं वा ण भणिओसि ॥'*

अत्र वक्ष्यमाणविषयो भणननिषेधो वाच्यः सन्वक्तुमेवोपक्रान्तस्य निषेधानुपपत्तेः स्वयमविश्राम्यन्स्वात्मसमर्पणेन त्वां प्रति मरिष्यामि अथवा म्रिये यद्वा मृता यावदहमिति विधित्रयमर्था-

*किं भणामो भणति किमिति अथ किंवा अनेन भणितेन ।
भणिष्यसे तथापि अथवा भणामि किं वा न भणितोऽसि ॥ छाया

रुद्रटेन तु भावालङ्कारो [१]द्विधैवोक्तः । [२]रूपकदीपकापन्हुति-तुल्ययोगितादावुपमाद्यलंकारो वाच्योपस्कारकत्वेनोक्तः । उत्प्रेक्षा तु स्वयमेव प्रतीयमाना कथिता ।

---

न्तरमाक्षिपति । यत्त्वत्रान्यैः 'वाच्योऽर्थः स्वसिद्धयेऽर्थान्तरमाक्षिपति इत्युक्तं तदयुक्तमेव । तथात्वे हि निषेध एव पर्यवसितः स्यान्न निषेधाभास इत्याक्षेपालंकार एव न स्यात् । आमुखावभासमानो हि निषेध आक्षेपलक्षणम् । न च विधिनिषेधयोर्विरोधात्साध्यसाधनभावो युक्तः । व्याजस्तुतिर्यथा—

इहिणं पहुणो पहुणो पहुत्तणं किं चिरंतनपहूण ।
गुणदोसा दोसगुणा एहिं कआ णहु कआ तेहिं ॥'*

अत्र चिरन्तनानां निन्दा वाच्या सती स्वयमनुपपद्यमाना स्तुतावात्मानमर्पयति । तद्गतत्वेन वस्तुदर्शितायाः निन्दाया असंभवात् । एवमद्यतनानामपि स्तुतिर्निन्दायामात्मानमर्पयति । तस्या अपि विपरीततया तद्गतत्वेनासंभवात् ।

(१) गुणीभूतागुणीभूतवस्तुविषयत्वेनेत्यर्थः ।
यदाह—'यस्य विकारः प्रभवन्नप्रतिबद्धेन हेतुना येन ।
गमयति तदभिप्रायं तत्प्रतिबद्धं च भावोऽसौ ॥'
निदर्शनम्—"ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥"
अभिधेयमभिदधानं तदेव तदसदृशसकलगुणदोषम् ।
अर्थान्तरमवगमयति यद्वाक्यं सोऽपरो भावः ॥
निदर्शनमाह—एकाकिनी यदबला तरुणी तथाह-
मस्मद्गृहे गृहपतिः स गतो विदेशम् ।
कं याचसे तदिह वासमियं वराकी
श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥ इति ।

(२) इदानीमलंकारस्यापि प्रतीयमानस्य वाच्योपस्कारकत्वं प्रतिपादयति—रूपकेत्यादिना । तत्र रूपकं यथा—

---

*अधुना प्रभवः प्रभवः प्रभुत्वं किं चिरन्तनप्रभूणाम् ।
गुणदोषा दोषगुणा एभिः कृता न खलु कृता तैः ॥ छाया ॥

¹रसवत्प्रेयःप्रभृतौ तु रसभावादिर्वाच्यशोभाहेतुत्वेनोक्तः । तदित्थं त्रिविधमपि प्रतीयमानमलंकारतया ख्यापितमेव ।

'भीमभ्रूकुटिपन्नगीफणमणिः कामस्य चण्डं चिता-
कुण्डं कुण्डलितेन्दुनालवलयप्रश्नं शिरस्कोत्पलम् ।
घ्राणस्याटिकमल्लिकापरिचिते भालाग्रशालाजिरे
दीप्रा दीपशिखा शिवस्य नयनं कार्शाणवं पातु नः ॥''

अत्र नयनादीनां मणिप्रभृतीनां चोपमा वाच्योपस्काराायावगम्यते । तां विना सादृश्याप्रतिपत्तेः । दीपकं यथा—

*'पाउअबन्धं पढिउं वन्धेउं तह अ कुज्जकुसुमाइं ।
पोढमहिलं अ रमिउं विरलच्चिअ के वि जाणन्ति ॥'

अत्र प्राकृतबन्धपाठादेरुपमावाच्योपस्कारायावगम्यते । प्रकृतस्य प्रौढमहिलारमणादेः सादृश्योपादानायैवोभयोरुपनिबन्धात् ।

अपह्नुतिर्यथा—'अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि ।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥'

अत्र कलङ्कस्य रजनिसादृश्यप्रतीतेरुपमा वाच्योपस्कारायावगम्यत एव । तुल्ययोगिता यथा—

'द्विगुणितादुपधानभुजाच्छिरः पुलकितादुरसः स्तनमण्डलम् ।
अधरमर्धसमर्पितमाननाद्व्यघटयन्त कथंचन योषितः ॥'

अत्र भुजादीनां सादृश्यावगमादुपमावाच्योपस्कारायावगम्यते । तुल्ययोगितादावित्यादिशब्दान्निदर्शनादेर्ग्रहणम् । उपमादीत्यादिशब्दादुपमेयोपमादीनाम् ।

(१) अधुना रसस्यापि वाच्योपस्कारकत्वं दर्शयितुमाह—रसवदित्यादि । प्रभृतिशब्दादूर्जस्व्यादयः । आदिशब्दाच्च तदाभासादयः । तत्र रसवदलंकारो यथा—

*प्राकृतबन्धं पठितुं बद्धुं तथा च कुब्जकुसुमानि ।
प्रौढमहिलाश्च रन्तुं विरला एव केऽपि जानन्ति ॥ छाया ॥

वामनेन तु सादृश्यनिबन्धनाया लक्षणाया वक्रोक्त्यलंकारत्वं ब्रुवता कश्चिद्ध्वनिभेदोऽलंकारतयैवोक्तः केवलं [1]गुणविशिष्टपदरचनात्मिका रीतिः काव्यात्मकत्वेनोक्ता।

---

'कृच्छ्रेणोरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले
मध्येऽस्यास्त्रिवलीतरङ्गविषमे निस्पन्दतामागता।
मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने॥'

अत्र वत्सराजस्य परस्परास्थाबन्धरूपो रत्याख्यः स्थायिभावो विभावानुभावव्यभिचारिसंयोगाद्रसीभूतः सन्वाच्योपस्कारकः। तत्संवलितत्वेन वाच्यस्य सचमत्कारं प्रतिपत्तेः। प्रेयोलंकारो यथा—

'तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः॥'

अत्र वितर्काख्यो व्यभिचारिभावो वाच्यशोभाधायक एव। ऊर्जस्व्यलंकारो यथा—

'दृग्लीलासु सकौतुकं यदि मनस्तन्मे दृशां विंशतिः
निःसंधौ परिरम्भणे रतिरथो दोर्मण्डलीदृश्यताम्।
प्रीतिश्चेत्परिचुम्बने दशमुखी वैदेहि सज्जा पुरः
पौलस्त्यस्य च राघवस्य च महत्पश्योपचारान्तरम्॥'

अत्र सीतां प्रति रावणस्य रतिरनौचित्येन प्रवृत्तेति रसाभासो वाच्योपस्कारकः। अन्यत्तु स्वयमभ्यूह्यम्। एतदेवोपसंहरति—तदित्थमित्यादिना। त्रिविधमिति। पर्यायोक्तादौ वस्तु, रूपकादावलंकारः, रसवदादौ रसः। तदेवं चिरंतनैः प्रतीयमानस्यालंकारान्तर्भाव एव तावदुक्तः। तदुपस्कार्यः पुनरात्मा कैश्चिदपि नाभ्युपगतः। वामनेन प्रतीयमानस्यालंकारान्तर्भावमभिदधतापि तदुपस्कार्य आत्मा कश्चिदुक्त इत्याह—वामनेनेत्यादि।

(१) यदाह—'विशिष्टा पदरचना रीतिः' इति। काव्यात्मकत्वेनेति। यदाह—'रीतिरात्मा काव्यस्य' इति। तदेवं विशिष्टपदरचनात्मिकायाः काव्यात्मत्वेनाभ्युपगताया रीतेः 'तदतिशयहेतवस्त्वलंकाराः' इत्याद्युक्त्यान्तर्भावितध्वनयोऽलंकारा उपस्कारका इत्ये-

उद्भटादिभिस्तु गुणालंकाराणां प्रायशः साम्यमेव सूचितम् । विषयमात्रेण भेदप्रतिपादनात् । संघटनाधर्मत्वेन चेष्टेः । तदेवमलंकारा एव काव्ये प्रधानमिति प्राच्यानां मतम् ।

वक्रोक्तिजीवितकारः [1]पुनर्वैदग्ध्यभङ्गीभणितिस्वभावां बहुविधां वक्रोक्तिमेव प्राधान्यात्काव्यजीवितमुक्तवान् । व्यापारस्य प्राधान्यं च काव्यस्य प्रतिपेदे । अभिधानप्रकारविशेषा एव चालंकाराः । सत्यपि त्रिभेदे प्रतीयमाने व्यापाररूपा भणितिरेव [2]कविसंरम्भगोचरः । [3]उपचारवक्रतादिभिः समस्तो ध्वनिप्रपञ्चः स्वीकृतः । केवलमुक्तिवै-

---

तन्मतम् । अन्यैः पुनरेतदपि प्रत्युक्तमित्याह—उद्भटादिभिरित्यादिना ।

(१) वैदग्ध्येत्यनेन वक्रोक्तेः स्वरूपमुक्तम् । यदाह—'वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते' इति । एवकारोऽन्यस्य काव्यजीवितत्वव्यवच्छेदकः । काव्यजीवितमिति काव्यस्यानुप्राणकम् । तां विना काव्यमेव न स्यादित्यर्थः । यदाह—'विचित्रो यत्र वक्रोक्तिवैचित्र्यं जीवितायते' इति । व्यापारस्येति=कविप्रतिभोल्लिखितस्य कर्मणः । कविप्रतिभानिर्वर्तितत्वमन्तरेण हि वक्रोक्तिरेव न स्यादिति कस्य जीवितत्वं घटत इति तदनुषक्तमेवास्यात्र प्राधान्यं विवक्षितम् । अतश्च द्वयोः प्राधान्यस्य दुर्योजत्वमत्र नाशङ्कनीयम् ।

(२) कवीति तत्रैव कविः । संरब्ध इत्यर्थः । तत्संरम्भमन्तरेण हि वक्रोक्तिरेव न स्यात् ।

(३) ननु च प्रतीयमानस्यानादरः किमभावमुखेनान्यथा वा कृत इत्याशङ्क्याह—उपचारेत्यादि । उपचारवक्रतादीनामेव मध्ये ध्वनिरन्तर्भूत इति तात्पर्यार्थः । यदाह—'यत्र दूरान्तरेऽन्यस्मात्सामान्यमुपचर्यते । लेशेनापि भवेत्कर्तुं किंचिदुद्रिक्तवृत्तिता ॥ यन्मूला सरसोल्लेखा रूपकादिरलंकृतिः । उपचारप्रधानासौ वक्रता काचिदिष्यते ॥' इति । एतामेवोदाजहार च—

* 'गअणं च मत्तमेहं धारालुलिअज्जुणाइं अ वणाइं ।
निरहंकारमिअङ्को हरन्ति नीलाओ अ णिसाओ ॥'

---

* गगनञ्च मत्तमेघं धारालुलितार्जुनानि च वचनानि ।
निरहङ्कारमृगाङ्का हरन्ति नीलाश्च निशाः ॥ १ ॥

चित्र्यजीवितं काव्यं, न व्यङ्ग्यार्थजीवितमिति [1]तदीयं दर्शनं व्यवस्थितम् ।

भट्टनायकेन तु व्यङ्ग्यव्यापारस्य प्रौढोक्त्याभ्युपगतस्य काव्यांशत्वं ब्रुवता न्यग्भावितशब्दार्थस्वरूपस्य व्यापारस्यैव प्राधान्यमुक्तम् । [2]तत्राप्यभिधाभावकत्वलक्षणव्यापारद्वयोत्तीर्णो रसचर्वणात्मा भोगापरपर्यायो व्यापारः प्राधान्येन विश्रान्तिस्थानतयाङ्गीकृतः ।

[3]ध्वनिकारः पुनरभिधातात्पर्यलक्षणाख्यव्यापारत्रयोत्तीर्णस्य ध्वननद्योतनादिशब्दाभिधेयस्य व्यञ्जनव्यापारस्या [4]वश्याभ्युपगम्यत्वाद्व्यापारस्य च वाक्यार्थत्वाभावाद्वाक्यार्थस्यैव च व्यङ्ग्यरूपस्य गुणा-

---

अत्र मदनिरहंकारत्वे औपचारिके इत्युपचारवक्रतादीनामपि ग्रहणम् । एवं सर्वोऽपि ध्वनिप्रपञ्चो वक्रोक्तिभिरेव स्वीकृतः सन्स्थित एव । यदि परं तस्य प्राधान्यमेव नास्तीत्याह—केवलमित्यादि ।

(१) तदीयमिति । वक्रोक्तिजीवितकारसम्बन्धीत्यर्थः । तदित्थं लक्षणामूलवक्रोक्तिमध्यान्तर्भावाद्ध्वनेरेव तत्त्वं प्रतिपादितम् । कैश्चिदप्यस्य वागविषयत्वादलक्षणीयत्वमुक्तमित्याह—भट्टनायकेत्यादि ।

(२) तत्रापीति । कविकर्मरूपस्य व्यापारस्य प्राधान्ये सत्यपीत्यर्थः । 'अभिधा भावना चान्या तद्भोगीकृतिरेव च' इति काव्यं तावत्त्र्यंशं तेनोक्तम् । तत्रापि 'अभिधाधामतां याते शब्दार्थालंकृती ततः । भावनाभाव्य एषोऽपि शृङ्गारादिगणो मतः ॥' इत्यंशद्वयस्य विषयं प्रतिपाद्य 'तद्भोगीकृतिरूपेण व्याप्यते सिद्धिमान्नरः ' इति तृतीयोंऽशः सहृदयगतस्तदंशद्वयचर्वणात्मा 'द्रश्यमानाथवा मोक्षे यात्यङ्गत्वमियं स्फुटम्' इत्युक्त्या परब्रह्मास्वादसविधवर्ती विश्रान्तिधामतयाभ्युपगतः ।

(३) एवमिदानीमेतद्विप्रतिपत्तिप्रकारत्रयं निराकुर्वन्ध्वनेरेव काव्यात्मत्वं साधयति—ध्वनिकार इत्यादिना । समयापेक्षार्थावगनशक्तिरभिधा । सामान्यानां परस्परान्वितत्वेन विशेषार्थावबोधनशक्तिस्तात्पर्यम् । मुख्यार्थबाधादिसहकार्यपेक्षार्थप्रतिभासनशक्तिर्लक्षणा । एतद्व्यापारत्रयादुत्तीर्णस्य । तदतिरिक्तस्येत्यर्थः ।

(४) अवश्येति । तेन विना व्यङ्ग्यस्यार्थस्यासंग्रहणात् । व्यापारस्येति । व्यञ्जनात्मिकायाः क्रियाया इत्यर्थः । सा खल साध्यमानत्वेन

लंकारोपस्कर्तव्यत्वेन[1] प्राधान्याद्विश्रान्तिधामत्वादात्मत्वं[2] सिद्धान्तितवान् ।

व्यापारस्य विषयमुखेन स्वरूपप्रतिलम्भात्तत्प्राधान्येन प्राधान्यात्स्वरूपेण विदितत्वाभावाद्विषयस्यैव [3]समग्रभरसहिष्णुत्वम् । तस्माद्विषय एव व्यङ्ग्यनामा जीवितत्वेन वक्तव्यः । यस्य गुणालंकारकृतचारुत्वपरिग्रहसाम्राज्यम् । [4]रसादयस्तु जीवितभूता नालंकारत्वेन वाच्याः । अलंकाराणामुपस्कारकत्वाद्रसादीनां च प्राधान्येनोपस्कार्यत्वात् । तस्माद्व्यङ्ग्य एव वाक्यार्थीभूतः काव्यजीवितमित्येष एव पक्षो वाक्यार्थविदां सहृदयानामावर्जकः । व्यञ्जनव्यापारस्य सर्वैरनपह्नुतत्वात्तदाश्रयेण च पक्षान्तरस्याप्रतिष्ठानात् ।

यत्तु व्यक्तिविवेककारो वाच्यस्य प्रतीयमानं प्रति लिङ्गितया व्यञ्जनस्यानुमानान्तर्भावमाख्यत् तद्वाच्यस्य प्रतीयमानेन सह तादात्म्यतदुत्पत्त्यभावादविचारिताभिधानम् । तदेतत्कुशाग्रधिषणैः

---

पूर्वापरीभूतावयवत्वान्न स्वरूपेणोपलभ्यत इति विचारपदवीमेव स्वयमुपारोढुं नोत्सहत इति कथं नाम तस्या वाक्यार्थत्वं स्यादिति भावः ।

(१) उपस्कर्तव्यत्वेनेति । तत्परतयावस्थानेनेत्यर्थः यदुक्तम्—'वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम् । रसादिपरता यत्र स ध्वनेर्विषयो मतः ॥' इति । अत एव विश्रान्तिधामत्वादित्युक्तम् ।

(२) आत्मत्वमिति—सारभूतत्वमित्यर्थः । अत एव तेन विना काव्यमेव न स्यादिति तात्पर्यम् । नहि निर्जीवं शरीरं क्वाप्युपयुक्तम् ।

ननु यद्येवं तर्हि "गङ्गायां घोषः" इत्यत्रापि व्यङ्ग्यस्य सद्भावात्काव्यत्वं प्रसज्येत । नैतत् । इह यद्वदात्मनो व्यापकत्वाच्छरीरे घटादौ च वर्तमानत्वेऽपि करणादिविशिष्टे शरीर एव जीवव्यवहारो न घटादौ तद्वदस्यापि विविधगुणालङ्कारौचित्यचारुशब्दार्थशरीरगतत्वेनैवात्मव्यवहारो नान्यत्रेति न कश्चिद्दोषः ।

(३) समग्रेति । समग्रस्य भरस्यात्मेति व्यवहारादेः सहनशीलत्वमित्यर्थः । एतदेवोपसंहरति—तस्मादित्यादिना । यस्येति । व्यङ्ग्यनाम्नो रसाद्यात्मनो विषयस्य ।

(४) काव्यात्मनो रसस्य पुनरलंकारत्वमत्यन्तमेवावाच्यमित्याह—रसादय इत्यादि । आदिग्रहणाद्भावतदाभासादीनां ग्रहणम् ।

क्षोदनीयमतिगहनगहनमिति नेह प्रतन्यते ।

अस्ति तावद्व्यङ्ग्यनिष्ठो व्यञ्जनव्यापारः । [1]तत्र व्यङ्ग्यस्य [2]प्राधान्याप्राधान्याभ्यां ध्वनिगुणीभूतव्यङ्ग्याख्यौ द्वौ काव्यभेदौ ।

---

( १ ) व्यङ्ग्यनिष्ठे व्यञ्जनव्यापारे सत्यपीत्यर्थः ।

( २ ) व्यङ्ग्यं द्विविधं प्रधानमप्रधानञ्च वाच्यार्थापेक्षया व्यङ्ग्यार्थस्य चारुत्वोत्कर्षे व्यङ्ग्यं प्रधानम् । इदमेव ध्वनिभूतमित्युच्यते । यत्र च वाच्यार्थापेक्षया व्यङ्ग्यार्थस्य चारुत्वोत्कर्षाभाव अर्थाद्वाच्येन समत्वं न्यूनत्वं वा तदप्रधानम् । इदमेव गुणीभूतव्यङ्ग्यमित्युच्यते । उक्तञ्च सहृदयधुरन्धरेण ध्वनिकृताः—

"चारुत्वोत्कर्षनिबन्धना हि वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा ।"

श्रीमदप्पदीक्षिताश्च :—

यत्र वाच्यातिशायि व्यङ्ग्यं स ध्वनिः ।

यत्र व्यङ्ग्यं वाच्यानतिशायि तद्गुणीभूतव्यङ्ग्यम् ।

यदव्यङ्ग्यमपि चारु तच्चित्रमिति काव्यस्य भेदत्रयम्प्रदर्शितवन्तः ।

अत्रैव श्रीकृष्णः

"वाच्यातिशायि व्यङ्ग्यं यत्काव्यं ध्वनिरितीर्यते :
काव्यं तु कथिते व्यङ्ग्ये वाच्यादनतिशायिनि ॥
गुणीभूतव्यङ्ग्यमिति स्याद्व्यङ्ग्यस्याप्रधानतः ।
अव्यङ्ग्यमपि यच्चारु तत्काव्यं चित्रमिष्यते ॥"

ध्वनिकारोऽपि

"प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।
काव्ये उभे ततोऽन्यद्यत्तच्चित्रमभिधीयते ॥"

इत्यस्य त्रैविध्यमेव प्रकटयामास ।

श्रीविश्वनाथस्तु :—

"काव्यं ध्वनिगुणीभूतव्यङ्ग्यं चेति द्विधा मतम्" इत्यस्य भेदद्वयमेवोदाजहार ।

[१]व्यङ्ग्यस्यास्फुटत्वेऽलंकारवत्त्वेन चित्राख्यः काव्यभेदस्तृतीयः । [२]तत्रोत्तमो ध्वनिः । तस्य लक्षणाभिधामूलत्वेनाविवक्षितवाच्यविव-

(१) व्यङ्ग्यस्याविवक्षितत्वे सतीत्यर्थः । यदुक्तं ध्वनिकृताः—

"रसभावादिविषयविवक्षाविरहे सति ।
अलङ्कारनिबन्धोयः स चित्रविषयो मतः ॥
रसादिषु विवक्षा तु स्यात्तात्पर्यवती यदा ।
तदा नास्त्येव तत्काव्यं ध्वनेर्यत्र न गोचरः ॥"

(२) निरुक्तकाव्यभेदत्रये ध्वनिकाव्यमुत्तमम् ।
उक्तञ्च :—

"वाच्यातिशायिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम्" ।

तदेतदुत्तमं काव्यं ध्वन्यतेऽस्मिन्निति व्युत्पत्त्या बुधैर्ध्वनिरित्यभिधीयते । यथा :—

"मुक्तावली निशि मया दयिताकदम्ब-
वाटीकुटीरकुहरे सखि विस्मृतास्ति ।
तामाहरेति वृषभानुजया नियुक्ता
ताम्प्रोज्झ्य किं शशिकले गृहमागतासि ॥"

अत्र कृष्णाङ्गसङ्गानुभवायैव तया त्वं प्रतार्य प्रेषिता, न पुनर्मौक्तिकहाराहरणाय । यन्नखाङ्कशशिकलाञ्चितवक्षोजशम्भुः समागतासीति व्यङ्ग्यस्य वाच्यादतिचारुत्वादुत्तममिदं काव्यम् ।
गुणीभूतव्यङ्ग्यं यथा :—

"ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥"

कस्याश्चित्तरुण्या नववञ्जुलमञ्जरीसनाथकरं ग्रामतरुणं पश्यन्त्या मुखमालिन्यमभवदित्यर्थः । नूनमनयाऽत्र वञ्जुललतागृहे सङ्केतोऽकारि परं कर्मान्तरव्यासङ्गात्तत्र न सम्प्राप्ता, जारश्च मञ्जर्यागतप्रत्यागतं विज्ञाय सुखाद्वञ्चितास्मीति खिन्ना बभूवेति व्यङ्ग्यम् । तच्च गुणीभूतम् । तदपेक्षया वाच्यस्यैव चमत्कारकारित्वात् । यतः पश्यन्त्या नितरां मुखच्छाया मलिना भवतीत्यनेन दर्शनकाल एव

क्षितान्यपरवाच्याख्यौ द्वौ भेदौ[1] । [2]आद्योऽप्यर्थान्तरसंक्रमितवाच्या-त्यन्ततिरस्कृतवाच्यत्वेन द्विविधः । [3]द्वितीयोऽप्यसंलक्ष्यक्रमसंलक्ष्य-

तत्कार्यं मालिन्यं तस्यातिशयः सन्तन्यमानताचेति वाच्यं प्रतीयत इति ।

बहुतरप्रभेदं चित्रमपि दिङ्मात्रमुदाहृयते ।

क्रमेणोदाहरणम् :—

"ऊर्जत्स्फूर्जद्गर्जनैर्वारिवाहाः प्रोद्यद्विद्युद्दामविद्योतिताशाः ।
अद्रावद्रौ विद्रुता द्राघयन्ते दन्तिभ्रान्त्या सिंहसङ्घप्रकोपान् ॥"

"कदम्बमाला कलिता कं सहर्षं न कुर्वती ।
कृष्णमूर्तिरिवाभाति कालिन्दीकाननस्थली ॥"

पूर्वत्र भ्रान्तिमतः सत्वेऽपि न तस्योत्कटत्वम्, किन्त्वनुप्रासस्यैव अतः शब्दचित्रत्वव्यपदेशः । परत्र कंसस्य हर्षं न कुर्वती कृष्णमूर्तिः कं जनं सहर्षं न कुर्वती, अपितु सर्वमेव जनं सहर्षं कुर्वतीत्यत्र कृष्णमूर्तिरिव कालिन्दीकाननस्थलीत्यनुप्रासे सत्युपमायास्ततोऽर्थ-चित्रत्वव्यपदेशः ॥

(१) "भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाभिधामूलौ ।
अविवक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च" ।

अविवक्षितं अनुपयुक्तं अन्वयायोग्यं वा वाच्यं वाच्योऽर्थो यस्मिन् सः । विवक्षितं वाच्यतावच्छेदकरूपेणान्वयबोधविषयं अन्यपरं व्यङ्ग्योपसर्जनीभूतश्च वाच्यं वाच्योऽर्थो यत्र तथाभूतः ।

(२) न केवलं ध्वनिरेव द्विविधः किन्तु तत्प्रभेदोऽप्ययमविव-क्षितवाच्यो द्विविधः, यदुक्तं—

"अर्थान्तरं सङ्क्रमिते वाच्येऽत्यन्तं तिरस्कृते ।
अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति ॥"

अर्थान्तरे उपयोगिनि लक्ष्यतावच्छेदके सङ्क्रमितं आश्रयत्वेन परिणतं वाच्यं यत्र तथाभूतः ।

अत्यन्ततिरस्कृतं न केनापि रूपेणान्वयप्रविष्टं वाच्यं यत्र तथाभूतः ।

(३) विवक्षितान्यपरवाच्योऽपि ध्वनिः, असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः । उक्तञ्च :—

क्रमव्यङ्ग्यतया द्विविधः । लक्षणामूलः शब्दशक्तिमूलो [1]वस्तुध्वनिः । असंलक्ष्यक्रमव्यङ्ग्योऽर्थशक्तिमूलो [2]रसादि ध्वनिः । संलक्ष्य-

"विवक्षिताभिधेयोऽपि द्विविधः प्रथमं मतः ।
असंलक्ष्यक्रमो यत्र व्यङ्ग्यो लक्ष्यक्रमस्तथा ॥"

सम्यङ् न लक्षयितुं शक्यः क्रमो यस्यासावसंलक्ष्यक्रमः, सचासौ व्यङ्ग्यो यस्मिन् सः ।

(१) वस्तुध्वनिरिति । रसालंकारव्यतिरिक्तस्य वस्तुमात्रस्य ध्वन्यमानत्वात् । तत्रार्थान्तरसंक्रमितवाच्यो वस्तुध्वनिर्यथा—

'स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥'

अत्र रामशब्दो राज्यनिर्वासनाद्यसंख्येयदुःखभाजनत्वस्वरूपं वस्तु ध्वनति । अत्यन्ततिरस्कृतवाच्योऽपि यथादिकवेर्वाल्मीकेः—

'रविसक्रान्तसौभाग्यस्तुषारावृतमण्डलः ।
निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥'

अत्रान्धशब्दः स्वार्थं निमित्तीकृत्यादर्शनसाधारणविच्छायत्वादिधर्मजातं वस्तुरूपं व्यनक्ति ।

(२) आदिशब्दाद्भावतदाभासादयः । यथाह ध्वनिकारः—
"रसभावतदाभासतत्प्रशान्त्यादिरक्रमः" ॥

तत्र रसध्वनिर्यथा—

'त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥'

अत्र विभावानुभावव्यभिचारिभिर्व्यक्त एव रसः ।

भावध्वनिर्यथा—

'जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता ततः ।

नो यावत्परिरभ्य चाटुकशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥'

अत्र विधिं प्रत्यसूयाख्यो व्यभिचारिभावः ।

रसाभासध्वनिर्यथा—

'स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान्रणमखमुखे यं मृगयसे ।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बला-
त्तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥'

अत्रानेककामुकविषयोऽभिलाष इति रसाभासः ।

भावाभासध्वनिर्यथा—

राकासुधाकरमुखी तरलायताक्षी
सा स्मेरयौवनतरङ्गितविभ्रमास्या ।
तत्किं करोमि विदधे कथमत्र मैत्रीं
तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥'

अत्रानौचित्यप्रवृत्ता चिन्तेति भावाभासः ।

भावप्रशमो यथा—

'एकस्मिञ्शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यं हृदयस्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
दंपत्योः शनकैरपाङ्गवलनामिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यावृत्तकण्ठग्रहः ॥'

अत्रासूयायाः प्रशम इति भावप्रशमध्वनिः ।

(१) वस्तुध्वन्यलङ्कारध्वनयोर्मध्ये प्रथमं शब्दशक्तिमूलं वस्तु-ध्वनिं दर्शयति यथा—

निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥'

अत्र कौरवाणां क्षतशरीरादिकत्वं वस्तुरूपं शब्दशक्त्यैव

तत्र रसादिध्वनिरलंकारमञ्जर्यां दर्शितः । काव्यस्य शृङ्गारप्रधानत्वात् ।

प्रतीयते । स एवार्थशक्तिमूलो यथा—

*'अरससिरोमणि धुत्ताणँ अग्गिमो पुत्ति धणसमिद्धिमओ ।
इइ भणिएण णअङ्गी पप्फुल्लविलोअणा जाआ ॥'

अत्रार्थशक्त्या ममैवोपभोग्योऽयमिति वस्तु व्यज्यते । स एवोभयशक्तिमूलो यथा—

†'पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले ग्गामे ।
उग्गअपओहरं पेक्खिऊण जइ वससि ता वससु ॥'

अत्र यद्युपभोगक्षमोऽसि तदा आस्स्वेति वस्तु वक्त्रौचित्यमाश्रित्य शब्दार्थशक्त्याभिव्यज्यत इत्युभयशक्तिमूलत्वम् । शब्दशक्तिमूलोऽलंकारध्वनिर्यथा—

'उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः ।
पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम् ॥'

अत्र शब्दशक्त्या मेघलक्षणमर्थान्तरं प्रतीयते । प्रकृताप्रकृतयोश्चार्थयोरसंबद्धाभिधायित्वं मा प्रसाङ्क्षीदिति तयोरौपम्यं कल्प्यत इत्यलंकारध्वनिः । स एवार्थमूलो यथा

'ता ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम् ।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेन ॥'

अत्र कौस्तुभबिम्बाधरयोः केवलयैवार्थशक्त्यौपम्यं गम्यत इत्यर्थशक्तिमूलोऽलंकारध्वनिः । उभयशक्तिमूलो यथा—

'जणहिअअविदारणए धारासलिललुलिए ण रमइ तहा ।
तव दिट्ठी चिउरभरे पिआण जह वेरिखग्गम्मि ॥'

---

*'अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः ।
इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥' इति च्छाया.

† पथिक नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।
उद्गतपयोधरं प्रेक्ष्य यदि वससि तद्वस ॥' इति च्छाया.

* तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम् ।
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥' इति च्छाया.

† 'जनहृदयविदारणके धारासलिललुलिते न रमति तथा ।
तव दृष्टिश्चिकुरभरे प्रियाणां यथा वैरिखड्गे ॥' इति च्छाया.

[1]गुणीभूतव्यङ्ग्यं वाच्याङ्गत्वादिभेदैर्यथासंभवं समासोक्त्यादौ प्रदर्शितम्। चित्रं तु शब्दार्थालंकारस्वभावतया बहुतरप्रभेदम्। तथा हि—

इहार्थपौनरुक्त्यं शब्दपौनरुक्त्यं शब्दार्थपौनरुक्त्यं चेति त्रयः पौनरुक्त्यप्रकाराः॥

आदौ पौनरुक्त्यप्रकारवचनं वक्ष्यमाणालंकाराणां [2]कक्षाविभागघटनार्थम्। [3]अर्थापेक्षया शब्दस्याप्रतीतावन्तरङ्गत्वेऽपि प्रथममर्थगतधर्मनिर्देशश्चिरंतनप्रसिद्ध्या पुनरुक्तवदाभासस्य पूर्वं लक्षणार्थः। इहेति शाब्दप्रस्तावे। इतिशब्दः प्रकारे। त्रिशब्दादेव संख्यापरिसमाप्तिसिद्धेः।

तत्रार्थपौनरुक्त्यं प्ररूढं दोषः।

प्ररूढाप्ररूढत्वेन द्वैविध्यम्। प्रथमं हेयवचनमुपादेये विश्रान्त्यर्थम्। तत्रेति त्रयनिर्धारणे। [4]यथावभासनविश्रान्तिः प्ररोहः।

आमुखावभासनं [5]पुनरुक्तवदाभासम्॥

---

अत्रोभयशक्त्या चिकुरभरखड्गयोरौपम्यं गम्यते।

(१) एवं ध्वनेः प्रभेदजातं प्रदर्श्य क्रमप्राप्तं गुणीभूतव्यङ्ग्यस्यान्यतो योजयति—गुणीभूतेत्यादिना।

(२) अर्थपौनरुक्त्ये पुनरुक्तवदाभासः, शब्दपौनरुक्त्ये छेकानुप्रासादिः, उभयपौनरुक्त्ये लाटानुप्रासः, इत्येवम्भूतः कक्षाविभागः।

(३) शब्दप्रतीतिर्हि प्रथमं भवति ततश्चार्थप्रतीतिरिति नियमस्तेन प्राक् शब्दगत एव धर्मनिर्देशो न्याय्यो नार्थगत इत्याशङ्क्याह अर्थेत्यादि।

"नन्वादौ शब्दगतो धर्मनिर्देशः कार्यः पश्चादर्थगत इति क्रमस्य न किञ्चित्प्रयोजनमुत्पश्यामः किन्तेन" इति यदन्यैरुक्तं तदयुक्तम्।

शब्दार्थयोः क्रमेणैव प्रतीतावनभासनात्तथात्वेनैव धर्मनिर्देशस्योपपत्तेः।

(४) आपाततः पर्यवसानसमयेऽप्येकार्थस्यैव प्रतीतिरितिभावः।

(५) पुनरुक्तस्य इव पुनरुक्तवद् आभासो ज्ञानं यस्य सः।

[1]आमुखग्रहणं पर्यवसानेऽन्यथात्वप्रतिपत्त्यर्थम्। लक्ष्यनिर्देशे नापुंसकः संस्कारो लौकिकालंकारवैधर्म्येण काव्यालंकाराणामलंकार्यपारतन्त्र्यध्वननार्थः। अर्थपौनरुक्त्यादेवार्थाश्रितत्वादर्थालंकारत्वं ज्ञेयम्। प्रभेदास्तु विस्तरभयान्नोच्यन्ते। उदाहरणं मदीये श्रीकण्ठस्तवे यथा—

'अहीनभुजगाधीशवपुर्वलयकङ्कणम्।
शैलादिनन्दिचरितं क्षतकंदर्पदर्पकम्॥
वृषपुंगवलक्ष्माणं शिखिपावकलोचनम्।
ससर्वमङ्गलं नौमि पार्वतीसखमीश्वरम्॥'

'दारुणः काष्ठतो जातो भस्मभूतिकरः परः।
रक्तशोणार्चिरुच्चण्डः पातु वः पावकः शिखी॥'

एतच्च सुबन्तापेक्षया। तिङन्तापेक्षया च यथा तत्रैव—

'भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः।
जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः॥'

शब्दपौनरुक्त्यं तु व्यञ्जनमात्रपौनरुक्त्यं स्वरव्यञ्जनसमुदायपौनरुक्त्यं च। [2]अलंकारप्रस्तावे केवलं स्वरपौनरुक्त्यमचारुत्वान्न गण्यते। इति द्वैविध्यमेवोक्तम्।

संख्यानियमे पूर्वं [3]छेकानुप्रासः॥

द्वयोर्व्यञ्जनसमुदाययोः परस्परमनेकधा सादृश्यं संख्यानियमः। पूर्वं व्यञ्जनसमुदायाश्रितं यथा—

---

(१) यथावभातस्यार्थस्य पर्यवसाने तथात्वेनैवाविश्रान्तिरित्यर्थः।

(२) केवलं स्वरपौनरुक्त्यं कुतो न गणितमित्याशङ्क्याह—अलंकारेत्यादि। यथा—'इन्दीवरम्मि इन्दम्मि इन्दआलम्मि इन्दिअगणम्मि इन्दिन्दिरम्मि इन्दम्मि जोइण्णो सरिससंकप्पो॥' अत्र स्वरपौनरुक्त्यस्य चारुत्वाभावान्नालंकात्वम्।

(३) अन्वित्युपसर्गार्थो वीप्सा, अर्थादनेकवारम्। प्रेत्युपसर्गार्थः प्रकृष्टोऽर्थादुत्तमः। आस शब्दार्थो न्यासः। तथा च अनुप्रास इति शब्दसमुदायार्थो वारंवारमुत्तमन्यासः।

'किं नाम दर्दुर दुरध्यवसाय ? सायं
कायं निपीड्य निनदं कुरुषे रुषेव ।
एतानि केलिरसितानि सितच्छदाना-
माकर्ण्य कर्णमधुराणि न लज्जितोऽसि ॥'

अत्र सायंशब्देनास्यालंकारस्य यकारमात्रसादृश्यापेक्षया वृत्त्यनुप्रासेन सहैकाभिधानलक्षणः संकरः । छेका विदग्धाः ।

अन्यथा तु वृत्त्यनुप्रासः ॥

केवलव्यञ्जनमात्रसादृश्यमेकधा समुदायसादृश्यं त्र्यादीनां च परस्परसादृश्यमन्यथाभावः । वृत्तिस्तु रसविषयो व्यापारः । तद्वती पुनर्वर्णरचनेह वृत्तिः । सा च परुषकोमलमध्यमवर्णारब्धत्वात्त्रिधा[१]। तदुपलक्षितोऽयमनुप्रासः । यथा—

---

रुद्रटस्तु:—"एकद्वित्रान्तरितं व्यञ्जनमविवक्षितस्वरं बहुशः ।
आवर्त्यते निरन्तरमथवा यदसावनुप्रासः ॥"

इत्युदाजहार ।

अयञ्च छेकैर्विदग्धैरेव प्रायशोऽनुप्रयुज्यमानत्वाच्छेकानुप्रास इति कथ्यते ।

एषः—सजातीयाव्यवहितद्वित्रादिवर्णानामप्यावर्तने सम्भवति ।

यदुक्तम्:—

"सजातीयाव्यवहित-वर्णा द्वित्रादयो यदि ।
आवर्तन्ते तदा केचिच्छेकानुप्रासमूचिरे ॥"

(१) उक्तञ्च—श्रीमता विद्याभूषणेन—

"माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।
ओजप्रकाशकैस्तैश्च परुषा कोमलापरैः ॥"

एतासां क्रमेणोदाहरणानि:—

"अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः ।
कुर्वन्ति यूनां सह सा यथैताः स्वान्तानि शान्तापरचिन्तितानि ॥"

'आटोपेन पटीयसा यदपि सा वाणी कवेरामुखे
खेलन्ती प्रथते तथापि कुरुते नो मन्मनोरञ्जनम् ।
न स्याद्यावदमन्दसुन्दरगुणालंकारझंकारितः
स प्रस्यन्दिलसद्रसायनरसासारानुसारी रसः ॥

यथा वा—

'सह्याः पन्नगफूत्कृतानलशिखा नाराचपाल्योऽपि वा
राकेन्दोः किरणा विषद्रवमुचो वर्षासु वा वायवः ।
न त्वेताः सरला सितासितरुचः साचीकृताः सालसाः
साकूताः समदाः कुरङ्गकदृशां मानानुविद्धा दृशः ॥'

स्वरव्यञ्जनसमुदायपौनरुक्त्यं यमकम्[१] ॥

अत्र क्वचिद्भिन्नार्थत्वं क्वचिदभिन्नार्थत्वं क्वचिदेकस्यानर्थकत्वमपरस्य सार्थकत्वमिति संक्षेपतः प्रकारत्रयम् । यथा—

'यो यः पश्यति तन्नेत्रे रुचिरे वनजायते ।
तस्य तस्यान्यनेत्रेषु रुचिरेव न जायते ॥'

इदं सार्थकत्वे । एवमन्यज्ज्ञेयम् ।

शब्दार्थपौनरुक्त्यं प्ररूढं दोषः ॥

---

"मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा—
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां—
दोष्णां चैषां किमेतत्फलमिह नगरीरक्षणे यत्प्रयासः ॥"

"अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥"

एवं व्यञ्जनमात्राश्रयमलंकारद्वयं लक्षयित्वा स्वरव्यञ्जनाश्रयं यमकं लक्षयति—स्वरेत्यादि ।

(१) अत्रैव विश्वनाथः—"सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः
क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते"

प्ररूढग्रहणं वक्ष्यमाणप्रभेदवैलक्षण्यार्थम्। यदाहुः—'शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्।' इति।

तात्पर्यभेदवत्तु लाटानुप्रासः[1] ॥

तात्पर्यमन्यपरत्वम्। तदेव भिद्यते, नतु शब्दार्थयोः स्वरूपम्। यथा—

'ताला जाअन्ति गुणा जाला दे सहिअएहिँ घेप्पन्ति।
रइकिरणाणुगाहिआइँ होन्ति कमलाइँ कमलाइँ॥'*

'ब्रूमः कियन्नय कथंचन कालमल्प-
मत्राब्जपत्त्रनयने नयने निमील्य।
हेमाम्बुजं तरुणि तत्तरसापहृत्य
देवद्विषोऽयमहमागत इत्यवेहि॥'

"अत्राब्जपत्त्रनयने निमील्य" इत्यादौ विभक्त्यादेरपौनरुक्त्येऽपि बहुतरशब्दार्थपौनरुक्त्याल्लाटानुप्रासत्वमेव।

'काशाः काशा इवाभान्ति(न्तः) सरांसीव सरांसि च।
चेतांस्याचिक्षिपुर्यूनां निम्नगा निम्नगा इव॥

इत्यादावनन्वयेन सहास्यैकाभिधानलक्षणो न संकरः। अन्योन्यापेक्षया शब्दार्थगतत्वेनार्थमात्रगतत्वेन च व्यवस्थितेर्भिन्नविषयत्वात्।

'अनन्वये च शब्दैक्यमौचित्यादानुषङ्गिकम्।
अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकम्॥'

---

(१) अत्र श्री गोविन्दठक्कुरः—
"शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः"।

* तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि॥ १॥

अत्र एकः कमलशब्दो वाच्यपर्यवसितः, अन्यश्च सौरभबन्धुरत्वाद्यनेकधर्मनिष्ठ इति तात्पर्यभेदः।

तदेवं पौनरुक्त्ये पञ्चालंकाराः[1] ॥

[2]निगदव्याख्यातमेतत् ।

वर्णानां खड्गाद्याकृतिहेतुत्वे चित्रम्[3] ॥

पौनरुक्त्यप्रस्तावे स्थानविशेषश्लिष्टवर्णपौनरुक्त्यात्मकं चित्रवचनम् । यद्यपि लिप्यक्षराणां खड्गादिसंनिवेशविशिष्टत्वं तथापि श्रोत्राकाशसमवेतवर्णात्मकशब्दाभेदेन तेषां लोके प्रतीतेर्वाचकालंकारोऽयम् आदिग्रहणाद्यथाव्युत्पत्तिसंभवं पद्मबन्धादिपरिग्रहः । यथा—

'भासते प्रतिभासार रसाभासाहताविभा ।
भावितात्माशुभावादे देवाभा बत ते सभा ॥'

एषोऽष्टदलपद्मबन्धः । अत्र दिग्दलेषु निर्गमप्रवेशाभ्यां श्लिष्टाक्षरत्वम् । विदिग्दलेषु त्वन्यथा । कर्णिकाक्षरं तु श्लिष्टमेव ।

अथार्थालङ्कारानाहः—

उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्वे उपमा ।

[4]उपमानोपमेययोरित्यप्रतीतोपमानोपमेयनिषेधार्थम् । साधर्म्ये त्रयः प्रकाराः । भेदप्राधान्यं व्यतिरेकादिवत् । अभेदप्राधान्यं रूपकादिवत् । द्वयोस्तुल्यत्वं यथास्याम् । यदाहुः—'यत्र किंचित्सामान्यं

(१) पुनरुक्तवदाभासमर्थपौनरुक्त्याश्रितं, छेकानुप्रासादयः शब्दपौनरुक्त्याश्रयाः, लाटानुप्रासस्तूभयाश्रित इति पञ्च पौनरुक्त्याश्रितालङ्काराः ।

(२) निर्विवादमित्यर्थः ।

(३) "तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ।" इति गोविन्दठक्कुरः ।

(४) ननु साधर्म्यं समानधर्मसम्बन्धः, स च उपमानोपमेययोरेव सम्भवति नहि कार्यकारणादिकयोरिति "साधर्म्ये" इत्यनेनैव कार्यनिर्वाहात् उपमानोपमेययोरुपादानं किमर्थमित्याशङ्क्याहः—उपमानेत्यादि ।

कश्चिच्च विशेषः स विषयः सदृशतायाः' इति । [1]उपमैवानेकप्रकार-वैचित्र्येणानेकालंकारबीजभूतेति प्रथमं निर्दिष्टा । अस्याश्च पूर्णालुप्तादि-त्वभेदाच्चिरंतनैर्बहुविधत्वमुक्तम् । तत्रापि साधारणधर्मस्य क्वचिद्-नुगामितयैकरूप्येण निर्देशः । क्वचिद्वस्तुप्रतिवस्तुभावेन पृथङ्निर्देशः पृथङ्निर्देशे च संबन्धिभेदमात्रं प्रतिवस्तूपमावत् । बिम्बप्रतिबिम्ब-भावो वा दृष्टान्तवत् । क्रमेणोदाहरणम्—

'प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः ।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥'

'यान्त्या मुहुर्वलितकंधरमाननं त-
दावृत्तवृन्तशतपत्त्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥'

अत्र वलितत्वावृत्तत्वे सम्बन्धिभेदाद्भिन्ने । धर्म्यभिप्रायेण तु बिम्बप्रतिबिम्बत्वमेव ।

'पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो नवचन्दनेन ।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥'

अत्र हाराङ्गरागयोर्निर्झरबालातपौ प्रतिबिम्बत्वेन निर्दिष्टौ ।
एकस्यैवोपमानोपमेयत्वेऽनन्वयः[2] ॥

---

(१) नन्वनेकेषु अर्थालङ्कारेषु सत्स्वपि प्रथममियमेव किं निर्दिष्टे-त्याहः—उपमैवेत्यादि ।

(२) न अन्वयः अनन्वयः, इति व्युत्पत्तेरनन्वयशब्दस्यार्थोऽन्वय-स्याभावः । अन्वयस्तु पदार्थयोः परस्परं सम्बधः । अत्र च रुद्रटः—

"सा स्यादनन्वयाख्या यत्रैकं वस्त्वनन्यसदृशमिति ।
स्वस्य स्वयमेव भवेदुपमानञ्चोपमेयञ्च ।"

अस्योदाहरणञ्चः—

आनन्दसुन्दरमिदं त्वमिव त्वं सरसि नागनासोरु ।
इयमियमिव तव च तनुः स्फारस्फुरदुरुरुचिप्रसरा ।

[1]वाच्याभिप्रायेण पूर्वरूपावगमः । एकस्य तु विरुद्धधर्मसंसर्गो द्वितीयसब्रह्मचारिनिवृत्त्यर्थः । अत एवानन्वय इति योगोऽप्यत्र संभवति । यथा—

'युद्धेऽर्जुनोऽर्जुन इव प्रथितप्रतापो
भीमोऽपि भीम इव वैरिषु भीमकर्मा ।
न्यग्रोधवर्तिनमथाधिपतिं कुरूणा-
मुत्प्रासनार्थमिव जग्मतुरादरेण ॥'

द्वयोः पर्यायेण तस्मिन्नुपमेयोपमा[2] ।

तच्छब्देनोपमानोपमेयत्वप्रत्यवमर्षः । पर्यायो यौगपद्याभावः । अत एवात्र वाक्यभेदः । इयं च धर्मस्य साधारण्ये वस्तुप्रतिवस्तु-निर्देशे च द्विधा ।

आद्या यथा—

'खमिव जलं जलमिव खं हंसश्चन्द्र इव हंस इव चन्द्रः ।
कुमुदाकारास्तारास्ताराकाराणि कुमुदानि ॥'

द्वितीया यथा—

'सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजा ।
वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः ॥'

सदृशानुभवाद्वस्त्वन्तरस्मृतिः स्मरणम् ॥

---

हे करिकरोरु, त्वमिव त्वं सरसि गच्छसीत्याद्यन्वयः । अत्र लोकोत्तरत्वं प्रतिपादयितुं आत्मनैवोपमानोपमेयभावो निबद्धः ।

(१) ननु सादृश्यस्योभयनिष्ठत्वेनैव सम्भवादेकस्य च तदभावा-त्कथमिह तदाश्रयस्याप्यस्य वचनमित्याहः—वाच्याभिप्रायेणेत्यादि ।

२. " प्रथमवाक्यगतसाधारणधर्ममेव साधारणधर्मीकृत्य प्रथम-वाक्यगतेनोपमेयेन प्रथमवाक्यगतस्योपमानस्योपमा उपमेयोपमा । उपमातुं योग्यः उपमेयः, उमेयेन उपमा यत्रेतिभावः ।

रसनोपमायान्तु एकस्यैव क्रमश उपमानोपमेयभावः, अतस्त-द्वारणाय द्वयोरिति । द्वयोरित्युपमानोपमेययोरित्यर्थः । मुखमिव कमलम् "इत्यादौ समकालमेव द्वयोरुपमानोपमेयत्वमिति तद्वारणाय पर्यायेण" इति ।

[1]वस्त्वन्तरं सदृशमेव । अविनाभावाभावान्नानुमानम्[2]। यथा—

'अतिशयितसुरासुरप्रभावं शिशुमवलोक्य तथैव तुल्यरूपम् ।
कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि ॥

सादृश्यं विना तु स्मृतिर्नायमलंकारः । यथा—

'अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः ।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तम् (सुप्तः) ॥'

अत्र च कर्तृविशेषणानां स्मर्तव्यदशाभावित्वेन स्मर्तृदशाभावित्वमसमीचीनम् । प्रेयोलंकारस्य तु सादृश्यव्यतिरिक्तनिमित्तोत्थापिता स्मृतिर्विषयः ।

यथा—'अहो कोपेऽपि कान्तं मुखम्' इति ।[3]तत्रापि विभावाद्यागूरितत्वेन, स्वशब्दमात्रप्रतिपाद्यत्वे यथा—'अत्रानुगोदं' इत्यादि ।

'यैर्दृष्टोऽसि तदा ललाटपतितप्रासप्रहारो युधि
स्फीतासृक्स्रुतिपाटलीकृतपुरोभागः परान्पातयन् ।
तेषां दुःसहकालदेहदहनप्रोद्भूतनेत्रानल-
ज्वालालीभरभास्वरे स्मररिपावस्तं गतं कौतुकम् ॥

---

१. सदृशस्य वस्तुनः दर्शनाद्यस्य कस्यचित्स्मृतेरलङ्कारत्वेऽतिप्रसङ्ग इत्याशङ्क्याह—वस्त्वन्तरमिति । अनुभूयमानेन वस्तुना सदृशस्यैव वस्तुनः स्मरणं स्मृतिरित्यर्थः ।

२. ननु यद्यन्यस्मादन्यस्य प्रतिपत्तिश्चेत्तदा कुतो नेदमनुमानमित्याशङ्क्याह—अविनाभावेत्यादि ।

विना ( व्यापकं ऋते ) भावः ( स्थितिः ) न भवति इत्यविनाभावः । व्याप्तिरित्यर्थः । इयमेवानुमानस्य वीजभूता ।

अविनाभावश्च व्याप्यव्यापकयोरेव सम्भवति नतु अनुभूयमानस्मर्यमाणयोरपि । तयोर्नित्यसाहचर्य्याभावादत एवात्र तदभावान्नानुमानमितिभावः ।

३. एवं स्थितेऽपि सतीत्यर्थः । विभावादिभिराच्छितत्वे प्रेयोलंकारस्य सादृश्यव्यतिरिक्तनिमित्ततोत्थापिता स्मृतिर्विषयो न स्वशब्दमात्रप्रतिपाद्यत्वे स्मृतिर्विषय इति संबन्धः । तत्र विभावाद्यागूरितत्वे स्मृतिर्यथा— 'अहो कोपेऽपि कान्तं मुखम्' इति ।

इत्यादौ सदृशवस्त्वन्तरानुभावे शक्यवस्त्वन्तरकरणात्मा विशेषालंकारः। करणस्य क्रियासामान्यात्मनो दर्शनेऽपि संभवात्। [1]मतान्तरे काव्यलिङ्गमेतत्। तदेते सादृश्याश्रयेण भेदाभेदतुल्यत्वेनाऽलङ्कारा निर्णीताः। [2]संप्रत्यभेदप्राधान्येन कथ्यन्ते—

अभेदप्राधान्य आरोप आरोपविषयानपह्नवे [3]रूपकम्।

अभेदस्य प्राधान्याद्भेदस्य वस्तुतः सद्भावः। [4]अन्यत्रान्यावाप आरोपः। तस्य विषयस्य विषय्यवच्छिन्नत्वाद् विषयस्यापह्नवेऽपह्नुतिः। अन्यथा तु विषयिणा विषयस्य रूपवतः करणाद्रूपकम्। साधर्म्यं त्वनुगतमेव।

[5]यदाहुः—'उपमैव तिरोभूतभेदा रूपकमुच्यते।
यथा बाहुलतापाणिपद्मं चरणपल्लवः।' इति।

१. एतत्स्मरणमुद्भटादिमते काव्यलिङ्गमिति कथ्यते यदुक्तम् उद्भटप्रणीते काव्यालङ्कारसंग्रहे—

'श्रुतमेकं यदन्यत्र स्मृतेरनुभवस्य वा।
हेतुतां प्रतिपद्येत काव्यलिङ्गं तदुच्यते॥' इति।

२. संप्रतीति। भेदाभेदतुल्यत्वाश्रयालंकारानन्तरमभेदप्रधानं लक्षयितुमुचितत्वादवसरप्राप्ताविति अर्थः। तत्र तावत्प्रथमं रूपकं लक्षयति—अभेदप्राधान्य इत्यादि।

३. आरोपे अभेदस्य प्रधानतायां—आरोपविषयस्य च अनपन्हवे सति रुपकं भवतीत्यर्थः। उपमायां भेदाभेदयोरुभयोः प्राधान्यम्। व्यतिरेकालङ्कारे भेदप्राधान्यम् उपमाव्यतिरेकयोर्व्यावृत्त्यर्थं "अभेदप्राधान्ये" इत्युक्तम्। अपन्हुत्यलङ्कारव्यावृत्तये "आरोप विषयानपन्हवे" इत्युक्तम्। रूपयति—उपमानोपमेययोरभेदारोपेण एकतां नयतीति रूपकम्।

४. अन्यत्र मुखादौ, अन्यस्य चन्द्रादेरावापः निक्षेप इत्यर्थः।

५. दण्डिमहोदयाः।

[1]आरोपादभेदेनाध्यवसायः प्रकृष्यते इति पश्चात्तन्मूलालंकार-विभागः। इदं तु निरवयवं सावयवं परम्परितमिति त्रिविधम्। आद्यं [2]केवलं मालारूपकं चेति द्विधा। द्वितीयं [3]समस्तवस्तुविषयमेकदेश-विवर्तिचेति द्विधैव। तृतीयं तु श्लिष्टाश्लिष्टशब्दनिबन्धनत्वेन द्विविधं सत्प्रत्येकं केवलमालारूपकत्वाच्चतुर्विधम्। तदेवमष्टौ [4]रूपकभेदाः। [5]अन्ये तु प्रत्येकं वाक्योक्तसमासोक्तादिभेदाः संभवन्ति तेऽन्यतो द्रष्टव्याः। क्रमेण यथा—

(६) दासे कृतागसि भवत्युचितः प्रभूणां
पादप्रहार इति सुन्दरि नास्मि दूये।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै-
र्यच्छिद्यते तव पदं ननु सा व्यथा मे॥'

---

१. ननु चाध्यवसायगर्भाणामप्यलंकाराणामभेदप्राधान्ये सति प्रथममारोपगर्भा अलंकाराः किमिति लक्षिता इत्याशङ्कयाह—आरोपादित्यादि।

२. केवलमेकधैव रूपितमित्यर्थः। यत्र एकस्मिन् बहव आरोप्यन्ते तन्मालारूपकम्।

३. समस्तं वस्तु आरोप्यमाणविषयः शब्दप्रतिपाद्यो यत्र तत्। एकस्मिन्देशेंऽशे विवर्तनाद् विशेषेण वर्तनात् अर्थात् आरोप्यमाणस्य सर्वत्र शब्दवशलभ्यत्वे एकांशेऽर्थवशलभ्यत्वस्य विशेषस्य सद्भावा-देकदेशविवर्ति।

४. तत्रादौ निरवयवं, सावयवं परम्परितञ्चेति त्रिविधम्। प्रथमं केवलं मालारूपकञ्चेति द्विविधम्। द्वितीयं समस्तवस्तुविषय-मेकदेशविवर्तिचेति द्विविधम्।

५. अन्य इति एतद्भेदाष्टकव्यतिरिक्ताः। चिरन्तनालंकारग्रन्थे-ष्वेव संभवन्तीति भावः।

६. मानिनीं प्रसादयितुः कस्यचिन्नायकस्योक्तिरियम्। तव पाद-प्रहारेऽपि मे पुलकोद्गमो भवति तथापि मयि तव क्रोध इत्यर्थः। अत्र एकस्यैव पुलकाङ्कुरस्य एकेनैव कण्टकेन रूपणात् निरवयवत्वं केवलत्वञ्च।

